इस के अंशों १७३ । ३६ । ३७ को, नौ ९ से भाग देकर होवा, कलादिक १९ । १७ सूर्य का उच्चबल। इसी रीति से और ग्रहों का भी करना ॥(और चक्रोंका बल)

त्रिंशत्स्वभे विंशतिरात्मतुङ्गे तिथिः सुहृद्भे दश कं त्रिकोणे । नवांशके पञ्च भवन्त्यऽशीतिरेवं युगाप्ताश्च विशोपकाः स्युः ॥ उक्ताः कलाः स्वर्त्तगते ग्रहेन्द्रे प्रत्येकवर्गे त्वधिमित्रगेहे । स्वाङ्घ्र्यंशहीना हितगेह-संस्थे स्वार्धोनिताः स्वाङ्घ्रिलवत्रयोनाः । समर्त्तगे शत्रु-गृहोपयाते निजाष्टमांशप्रमितं बलं स्यात् । अधिद्वि-षड्भोपगते स्वकीये नृपांशालिप्ता इति वर्गवीर्यम् ॥ यथागतं तुङ्गबलं तु तेन समन्वितं वर्गबलं बलं स्यात् ॥ बाणैर्नष्टबलो ग्रहो दशांमितैर्मध्यो विशोपै-

स्ततः । श्रेष्ठो घस्रमितैः सुखार्थजनकः प्रोक्तः खेदं-
स्त्रैर्भवेत् ॥ ( त्रैराशिपतिचक्र ) त्रैराशिपाः सूर्यसितो-
ऽर्किशुक्रौ दिवा निशीज्येन्दुबुधक्ष्माजाः । मेषाच्चतुर्णां
हरिभाद्विलोमं नित्यं परेष्वार्किकुजेज्यचन्द्राः ॥
( पञ्चाधिकारियोंमें वर्षेश्वर का विचार ) जन्मलग्नपति-
रित्थहाधिपोऽहर्निशं रविशशाङ्कराशिपः । स्युस्त्रिरा-
शिपतिरब्दलग्नपः पञ्च हायनपतित्वयोग्यकाः ॥ लग्नं
प्रपश्यन्नधिवीर्य एषां वर्षेश्वरः स्यादथ दृष्ट्यभावे ।
वीर्याधिकोनाब्दपतिर्विवीर्यो लग्नं प्रपश्यन्नपि हायनेशः ॥
वीर्ये समानेऽपि तनुं प्रपश्यन्दृष्ट्याधिको वर्षपतिर्वि-
धेयः । दृष्टौ समायां बहुवोऽधिकारा यस्येषुवर्ग्यो
शरदीश्वरः स्यात् ॥ जन्मलग्नस्वामी , मुन्थेश्वर , दिन

में वर्षप्रवेश हो, तो सूर्याक्रान्तराशि का स्वामी 'दिनेश्वर' रात में हो, तो चन्द्राक्रान्तराशि का स्वामी 'रात्रीश्वर' और 'वर्षलग्नेश्वर' यह पांछ वर्षेश्वर होने के अधिकारी हैं। इन पाछों में से जो लग्न को देखता हुवा पञ्चवर्गी में बलिष्ठ भी हो, वह वर्षेश्वर है। क्योंकि, दृष्टि न होने पर जो बलिष्ठ हो, सो रखना। तथा लग्न को देखता होवा भी बलहीन वर्षेश्वर न होता है। और दो ग्रह समबल होने वालियों में से बहुत अधिकारी वर्षेश्वर होता है॥(पञ्चाधिकारी)

| | | |
|---|---|---|
| १ जन्मपः जीवः | ३ दिनपः भौमः | ५ वर्षपः शुक्रः |
| २ मुन्थापः शनिः | ४ त्रैराशिपः शुक्रः | ६ वर्षेश्वरः भौमः |

( मास लाना ) मासाऽब्दयोः सूर्ययोर्यदऽन्तरात्सूर्यभुक्तिहृत्। फलं संस्कृत्य तन्मिश्रे मासारम्भः स्फुटो भवेत्॥ [illegible]  १६। ५३।

२६ । वर्षसूर्यस्पष्ट ० । १६ । २३ । २३ स्वेष्टमासानुरूप एकराशियुक्त १ । १६ । २३ । २३ का अन्तर ० । ० । ३० । ६ को मासार्कगति ५७ । १५ से भाग देकर प्राप्त फल ३१ । १८ वर्षसूर्य कम होने से मिश्र को ४७ । ३४ काट के होआ । मासप्रवेश का इष्ट १६ । १६ (अब लिखने की रीति) सं ५०१३ ज्येष्ठवदि षष्ठ्यां चन्द्रे इष्टं १६ । १६ सिंहोदये श्रीमतो हरीश्वरस्य द्वितीयमासप्रवेशः शुभदोऽस्तु ॥ (मासकुण्डली) सिंलं, वृंभौरा, मंचंजीमुँ, मीश, मेबुशु, वृसूके ॥ "इसी रीति से सब मास बनाना" ॥ (सहमलाना) शोध्यर्त्तशुद्धाश्रयमन्तराले लग्नं न चेत्सैकभमेतदुक्तम् ॥ "सहमों पर यह नियम है" कि काटनीयग्रह और काटकग्रहों के राशियों में जब लग्नराशि न आवे, तो सहमस्पष्ट को सैकराशि करना (जैसा) पुण्यसहम

पर । काटकरवि ० । १६ । २३ । २३ काटनीयचन्द्र ८ । ५ । २२ । १७ से काट के होवा ७ । १८ । ५८ । ५४ लग्न १ । ३ । २७ । २० से युक्त ८ । २२ । २६ । १४ अब विचारना, किं सूर्यराशिमेष से, चन्द्रराशिधनु तक वीच में लग्नराशिवृष आये है, इस वास्ते एकराशि न मिलाकर होवा दिनेष्टवाले का पुण्यसहमलग्न ॥ (रात्रि हो) तो उलटा करना, जैसा) काटक चन्द्र ८ । ५ । २२ । १७ काटनीयसूर्य से ० । १६ । २३ । २३ काट कर ३ । ११ । १ । ६ लग्न से १ । ३ । २७ । २० युक्त ५ । १३ । २८ । २६ चन्द्रराशि से सूर्यराशि तक लग्नराशि न आने के कारण, एकराशिमेलाकर होवा, रात्रि में पुण्यसहमलग्न ६ । १४ । ३७ । २६ ऐसी रीति से और सहम भी बनाना ॥ (और सहमों के नाम) पुण्यं, रवि-

श्चन्द्रात् शोध्यः । रात्रौ विलोमं, लग्नं क्षेप्यम् ॥ मित्रं[2], पुण्यसहमं गुरुसहमाच्छोध्यं, रात्रौवि, लंक्षे ॥ गुरुः[3], चन्द्रो रवेः, रात्रि, लंक्षेप्यं ॥ विद्यां[4], चन्द्रो रवेः, रात्रौवि, लंक्षे ॥ यशः[5], पुण्यं जीवात्, रावि, लं ॥ माहात्म्यं[6], भौमः पुण्यात्, रावि, लं ॥ आशा[7], शुक्रः शनेः, रात्रि, लंक्षेप्यं ॥ सामर्थ्य[8], लग्नपो भौमात्, रावि, लंक्षेप्यं ॥ राज्यं[9], रविः शनेः, रात्रौवि, लंक्षे ॥ पितृ[10], राज्यवत् । मातृ[11], शुक्रश्चन्द्रात्, रावि, लंक्षे ॥ भ्रातृ[12], शनिः जीवात्, रावि, लंक्षे ॥ पुत्रं[13], चन्द्रः जीवात्, रात्रौ च, लंक्षे ॥ [14]जीवितं, जीवः शनेः, रावि, लंक्षे ॥ कर्म[15], बुधः भौमात्, रावि, लं ॥ रोगं[16], चन्द्रो लग्नात्, रात्रौ च, लं ॥

प्रसव[१७]:, बुधो जीवात्, रावि, लंक्षे ॥ शास्त्र[१८], शनिर्जीवात्, रात्रौ शनिर्बुधात्, लंक्षे ॥ मृत्यु[१९], चन्द्रोऽष्टमभावात्, रात्रौ च, ॥ अर्थ[२०], धनपो द्वितीयभावात्, रात्रौ च, लंक्षे ॥ कार्य[२१], रविः शनेः, रविराशिपतिः क्षेप्यः। रात्रौ चन्द्रः शनेः, चन्द्रराशिपःक्षेप्यः। विवाहे[२३], शनिः शुक्रात, रात्रौ च, लग्नं क्षेप्यं ॥ चन्द्रः शनेः, रात्रौ च, षष्ठभावः क्षेप्यः ॥ बलं[२४], पुण्यसहमंजीवात्, रावि, लंक्षे ॥ रिपु[२५], शनिभौमात्, रावि, लंक्षे ॥ उपाय[२६], जीवः शनेः, रावि, लंक्षे ॥ शौर्य[२७], पुण्यं भौमात्, रावि लंक्षे ॥ कन्या[२८], चन्द्रो भृगोः, रावि, लंक्षे ॥ जाया[२९], शुक्रः सप्तमेशाद्विशोध्यः रात्रौ विलोमं, सप्तमभावः क्षेप्यः ॥

इति सहमानि ॥

( मुद्दादशा ) जन्मर्क्षसंख्यासहिता गताब्दा द्विरूनिता नन्द[९]हते तु शेषात् । सूचंभौराजीशबुकेशुखेटगा मुद्दा दशा स्यात्फलदा स्वपाके ॥ जन्मनक्षत्रसंख्या युक्त दोहीन गताब्द को नौ से भाग देकर जो शेष बचे क्रम से वर्ष पर वह मुद्दादशेश्वर होता है ॥ ( जैसा ) गताब्द १ जन्मर्क्ष अश्लेष की संख्या ६ युक्त १० दो२ हीन ८ को नौ ६ से शेष भी यही रहा । क्रम से केतुकी प्रथम मुद्दादशा है ॥

( मुद्दादशा की दिन ) स्युर्दशादिवसास्तेषां धृति[१८]स्त्रिंशं[३०]च्च मूर्छना[२१]: । वेदेषवो[५४] नागकृता[४८] मुन्यक्षा[५७]: क्षितिसायका[५१]: ॥ मूर्छना[२१]: षष्टि[६०]रेताभ्यो द्वादशांशेन मासजाः ॥

( मुद्दान्तर्दशा ) वेदा[४] नागा[८]: शरा[५]: सप्त[७] दिग्[१०]सा ऽङ्क[९]-

शरांरसाः । सूर्यादीनां च गुणकास्तैर्निघ्ना स्वदशास्वपि ॥ षष्ट्याप्ताऽन्तर्दशा तस्य जायतेऽतिपरिस्फुटा । ग्रह की मुद्दादशा के दिन अपने २ गुणक से गुण कर साठ से भाग देकर दिनादिक अन्तर्दशा सूर्यादि ग्रहों के क्रम से हुगी । चक्र में स्फुट है ॥

( मुन्था ) स्वजन्मलग्नं रवितष्टयातशरद्युतं सा भमुखेत्थिहा स्यात् ॥ बाराह से गताब्द १, को भाग देकर शेष १ जन्मलग्न ८ । २७ । १३ । ८ को युक्त कर के हुवा राशि आदि मुन्थालग्न ॥ ( मुन्थाफल योगों से ) मुथहाधिपतिः षष्ठोऽष्टमगो वा द्वादशश्चतुर्थश्च । अस्तमितो वक्री वा क्रूरदृशा वीक्षितो युतः क्रूरैः ॥ क्रूराच्चतुर्थसप्तमसंस्थः क्रूरेणैव विजितः । भव्यो न भवति वर्षे चाष्टमभवनाधिपेन युग्दृष्टः ॥

क्रूरदृशा मरणसमं कष्टं योगद्वयेन मरणकरः ॥

जब मुन्थेश अष्टमभावेश्वर के युक्त वा क्रूरदृष्टि से देखा हुआ हो, तब इस योग पर मरणतुल्य दुःख देता है ॥ जब मुन्थेश षष्ठाष्टमगतत्व आदि योग युक्त भी होवे, तब दोनों योगों के होने पर मारेगा ॥ याने मुन्थेशदशा में अष्टमाधाशीन्तरदशा के समय पर मृत्यु कहना चाहिये ॥ (और भी) मुथहाधिपतिः षष्ठाऽष्टमाऽस्ताऽन्त्यगतोऽस्तगः । वक्रो वा निजधातूत्थव्याधिं दद्याद्दशासु च ॥ मुथहाधिपतिः केन्द्रे स्वोच्चमित्रस्वराशिगः । करोति विविधाऽर्थाप्तिं महत्सौख्यं विशेषतः ॥ दशमे चाये पुण्ये स्वामित्वकरी नृणां भवेन्मुथहा । लग्नाद्द्वितीयपञ्चमसहजे चोपक्रमाद्धनं दत्ते ॥ लग्नात्षष्ठचतुर्थद्वादशसप्तमाष्टगा नेष्टा ॥

( अब भावों का फल )

१आरोग्यं कायपुष्टिं च मनःशान्तिं नृपात्सुखम् । कीर्तिं शत्रुक्षयं कुर्यात्तनुस्था मुथहा नृणाम् । मिष्टांशनं धनप्राप्तिं स्वेष्टलाभं रिपुक्षयम् । स्ववर्गसुखदं कुर्याद्धनस्था मुथहा सदा ॥ ३महोद्यमी कार्यसिद्धिप्रापकोऽतिसुखास्पदः । सर्वोपकारी च भवेत्तृतीये मुथहा यदा ॥ रोग४युक्तं कृशदेहं निरुद्यमयुतं नरम् । गुप्तभयं शत्रुभीतं कुर्यान्मुन्था चतुर्थगा ॥ सद्बुद्धिं धर्मवृद्धिं च यशः पुत्रादिभाजनम् । राजमानास्पदं दद्यान्नरं मुन्था सुतस्थिता ॥ रिपु६चौराऽमयग्रस्तं कार्यहीनं प्रमादिनम् । व्यसनाग्रस्तहृदयं कुर्यान्मुन्था रिपुस्थिता ॥ रोग७पीडां मनोमोहं कलत्रादिभयं व्यथाम् । करोति धनधीनाशं

मुन्था सप्तमगा नृणाम् ॥ दुष्टबुद्धिं कान्तिनाशं शत्रुभीतिं धनक्षयम् । चौरादिदुष्टभीतिं च मुन्था च निधने स्थिता ॥ भाग्योदयं धर्मवृद्धिं नृपमानं धनागमम् । स्ववर्गसन्तोषसुखं दद्यान्मुन्था च भाग्यगा ॥ स्वजनधर्मभाग्यार्थजन्यं सौख्यं सुचित्तताम् । यशःप्रवृद्धिं तनुते कर्मस्था मुथहा नृणाम् ॥ मनोरथाप्तिं स्वजनैः प्रीतिं राजकुलात्सुखम् । विशेषतोऽर्थलाभं वै कुरुते लाभगेत्थिहा ॥ विविधां रोगवृद्धिं च कार्पण्यं स्वजनैः सह । विवादं द्रव्यनाशं च दद्यान्मुन्था व्ययस्थिता ॥ ( वर्षेश्वर सूर्य का फल ) सूर्येऽब्दपे बलिनि राज्यसुखात्मजार्थलाभः कुलोचितभवः परिवारसौख्यम् । पुष्टिं यशोगृहसुखं विविधा प्रतिष्ठा शत्रुविमर्दयति फलं निज-

खेटयुक्त्या ॥ (अर्थ) वर्षेश जन्मकुण्डली में सत्स्थान में शुभग्रह दृष्ट हो, तो शुभफल सम्पूर्ण देवे। अन्यथा होने पर फल भी विपरीत होवे, और मिश्र होने पर फल भी मिश्र होवे। मध्ये रवौ फलमिदं निखिलं तु मध्यं स्वल्पं सुखं स्वजनतोपि विवादमाहुः। स्थानच्युतिर्न च सुखकृशतापि देहे भीतिर्नृपान्मुथाशिलो न शुभेन चेत्स्यात् ॥ सूर्ये बलेन रहितेऽब्दपतौ विदेशे यानं धनक्षयशुचोऽरिभयं च दत्ते। लोकापवादभयमुग्ररुजोऽतिदुःखं पित्रादिभिश्च न सुखं सुतमित्रभीतिः ॥ (चन्द्र का) वीर्यान्विते शशिनि वित्तकलत्रपुत्रमित्रालयादिविविधं सुखमाहुरार्याः। स्रग्गन्धमौक्तिकदुगूलसुखानुभूतिर्लाभः कुलोचितपदस्य नृपैः

सखित्वम् ॥ वर्षाधिपे शशिनि मध्यबले फलानि मध्यान्यमूनि रिपुता सुतमित्रवर्गे । स्थानान्तरे गतिरथो कृशता शरीरे श्लेष्मोद्भवश्च यदि पापकृते सराफः ॥ नष्टेऽब्दपे शशिनि शीतकफादिरोगश्चौरादिभिः स्वजनविग्रहमप्युशन्ति । दूरे गतिः सुतकलत्रसुखात्ययश्च स्यान्मृत्युतुल्यमऽतिहीनबले शशाङ्के ॥ ( भौमका ) भौमेऽब्दपे बलिनि कीर्तिजयाऽरिनाशः सेनाधिपत्वरणनायकता प्रतिष्ठा । लाभः कुलोचितधनस्य नमस्यताऽपि लोकेषु मित्रसुतवित्तकलत्रसौख्यम् ॥ मध्येऽब्दपेऽवनिसुते रुधिरस्रुतिश्च कोपोऽधिको विविधशस्त्रहतिक्षतानि । स्वामित्वमाप्तगणतो बलगौरवत्वं मध्यं सुखं निखिलमुक्तफलं विचिन्त्यम् ॥

हीनेऽब्दपेऽसृजि भयं रिपुतस्करादेर्लोकापवादभयमा-
त्मधिया विनाशः । कार्यस्य विघ्नगऽतिरोगभयं विदे-
शयानं त्वयोऽपनयतो गुरुदृष्ट्यभावे ॥ ( बुध का )
वर्षाधिपे बलिनि चन्द्रसुतेऽतिसौख्यं सेवाधनं लिख-
नतः पठनादिना वा । स्त्रीमित्रसौख्यमतुलं सुतश्च
नूनं वाणिज्यतो धनसमागमनं विलासः ॥ मध्यश्च
सोमतनयो निजवाक्यदोषात्सर्वार्थहानिमशुभं प्रकरो-
त्यनर्थम् । स्त्रीपुत्रमित्रकलहं सुखमपि चाल्पं वैरो-
दयं नृपजनात्स्वजनाच्च तद्वत् ॥ नष्टे बुधे नृपभयोऽ-
नृतसाक्षिता च क्लेशोदयः स्वजनतोऽर्थलयो विवादः ।
चौराद्भयं हृदि गलाऽमयकृत्स्वनेत्रपीडा भवेन्निखिल-
मन्यग्रहैश्च दृष्टे ॥ ( जीव का ) जीवेऽब्दपे बलयुते

परिवारसौख्यं धर्मो गुणग्रहिलता धनकीर्तिपुत्रैः । विश्वासिता जगति सन्मतिविक्रमाप्तिर्लाभो निधेर्नृपतिगौरवमप्यरिघ्नम् ॥ ³नाकेश्वरस्य सचिवे खलु मध्यवीर्ये लोकैर्विरोधमशुभं प्रकरोति भूपात् । वैरोदयं स्वजनतश्च परैर्विवादं कुर्यात्कृशत्वमतिचौरभयं सदाऽसौ ॥ नि³न्द्ये गुरौ खलु भवेन्नृपतोऽर्थनाशो धर्मोऽर्थहान्यसुखबन्धुविरोधपीडा । पादाक्षिगुल्फजठरे जघने च नृणां वाताऽर्तिकृत्परिभवं तनुसंक्षयं च ॥ ( शुक्र का ) शुक्रेऽब्दपे बलिनि नीरुजता विलासः सद्वस्त्ररत्नमधुराशनभोगतोषाः । क्षेमप्रतापविजयो वनिताविलासो हास्यं नृपाश्रयवशेन धनं सुखं च ॥ ³मध्ये नृपात्स्वजनतस्त्वरितो विरोधं श्लेष्मा-

ऽर्तिकृच्च सुतदारभयं च कष्टम् । कार्यार्थहानिमऽपि मोहरुजोदयं च कुर्यान्न सौख्यमिह स्वीयदशाप्रवेशे ॥ निन्द्ये[3] सितेऽखिलजनात्कलहो नितान्तं स्याद्वैरिता नृपलनादऽसुखं च कष्टम् । सौख्यार्थहानिरतिशोक-भयं विवादो दग्धे स्वपाकविषयेऽमितसंचयं स्यात् ॥ ( शनि का ) मन्देऽब्दपे[1] बलिनि नूतनभूमिवेशमक्षेत्राप्तिरऽर्थनिचयो यवनावनीशात् । आरामनिर्मिति-जलाशयतश्च सौख्यं पुष्टिः कुलोचितपदाप्तिगुणाश्च तद्वत् ॥ मध्यः[1] शनिः स्वजनराजजनाद्विरोधं वातार्तिकृज्जठरगुल्फगले च नेत्रे । दारिद्र्यदुःखपरिपीडन-मऽत्र कुर्याद्वैराजमऽर्थपरिहानिसुहृद्विरोधम् ॥ निन्द्ये तु सर्वमऽधमं तु सुहृद्विपत्तिः कष्टं क्रियाविफलता-

ऽनिलरुग्विकाराः । कार्यार्थहानिरऽथपुत्रसुहृद्विपत्तिं दग्धेऽर्कजे भवति दंष्ट्रिभयं च मृत्युः ॥ ( विशेष है ) सद्मोच्चगेषु परिपूर्णफलं खगेषु ह्रद्दात्रिभागकनवांशगतेषु मध्यम् । नीचारिवेश्मसहितेषु च दग्धवीर्यमऽस्तादि-गेषु खलु नष्टफलं समं तत् ॥ क्रूराक्रान्तः क्रूरयुतः क्रूरदृष्टश्च यो ग्रहः । विरश्मितां प्रपन्नश्च स विनष्टो बुधैः स्मृतः ॥

मुद्दादशेशों की अवधि वर्षादिक का चक्र

| सू | चं | भौ | रा | जी | श | बु | के | शु |
|---|---|---|---|---|---|---|---|---|
| ० | ० | ० | ० | ० | ० | ० | ० | ० |
| ० | १ | ० | १ | १ | १ | १ | ० | २ |
| १८ | ० | २१ | २४ | १८ | २७ | २१ | २१ | ० |

## वर्ष पर स्फुट मुद्दादशा का चक्र

| | के | शु | सू | चं | भौ | रा | जी | श | बु |
|---|---|---|---|---|---|---|---|---|---|
| | ० | ० | ० | ० | ० | ० | ० | ० | ० |
| | ० | २ | ० | १ | ० | १ | १ | १ | १ |
| | २१ | ० | १८ | ० | २१ | २४ | १८ | २७ | २१ |
| १३ | १३ | १३ | १३ | १३ | १३ | १३ | १३ | १३ | १४ |
| ० | १ | ३ | ३ | ४ | ५ | ७ | ८ | १० | ० |
| १७ | ८ | ८ | २६ | २६ | १७ | ११ | २९ | २६ | १७ |

(ग्रहों का फल लिखने की रीति) संवत् १३ मेषांशाः १७ केतुदशाप्रवेशः मास० दिन २१ फलम् । वर्षकुण्डली में लग्नस्थित केतु है उस का श्लोक "देहे मरुत्कृता पीडा" इह लिखना॥ ऐसा ही और ग्रहों को भी लिखना ॥ (ग्रहों का भावफल प्रथम सूर्य का)

बहुचिन्ता तथोद्वेगं शिरोऽक्षिमुखपीडनम् । बहु-रोषोऽङ्गनापीडा वर्षादौ लग्नगे रवौ ॥ रिपुराजा-ऽनलैश्चौरैर्विवादं त्रिभवव्ययम् । कुटुम्बकलहं वर्षे द्वितीयो भास्करो यदि ॥ राजमानं तथाऽरोग्यं धन-लाभं रिपुक्षयम् । सर्वोपक्रमसिद्धिश्च वर्षादौ तृतीये रवौ ॥ ईष्टस्वजनविद्वेषं भयं भूपालसम्भवम् । चतु-ष्पदमनुष्याणां भयं सूर्ये चतुर्थगे ॥ पुत्ररुक्कामिनी-कष्टं विवादं चातिमूढता । द्रव्यनाशः स्वेष्टदुःखं वर्षादौ पञ्चमे रवौ ॥ अन्नागमं तथैश्वर्यं राजमानं रिपुक्षयम् । सौख्यं कलत्रपुत्रादौ वर्षादौ षष्ठगे रवौ ॥ वस्तिचक्षुःशिरोरोगैः स्त्रीपीडा नगराटनम् । चित्तो-द्वेगं वैमनस्यं वर्षादौ सप्तमे रवौ ॥ चक्षुरुग्धनहानिः

स्याद्बहुपीडा कलेवरे । पित्तजा विषभूपालव्यालजाऽब्देऽष्टमे रवौ ॥ [९]भार्यापुत्रविवादं च मतिं धर्मक्रियादिषु । चित्तोद्वेगाकुलं नित्यं वर्षादौ नवमे रवौ ॥ [१०]राजमानादिजं सौख्यं विद्याप्राप्तेः सुखं धनम् । प्रस्थानं वंशविस्तारं वर्षादौ दशमे रवौ ॥ [११]वाजिद्विषादिद्रव्याप्तिः प्रमोदः स्वेष्टवर्गतः । नृपप्रसादमारोग्यं वर्षादौ लाभगे रवौ ॥ [१२]दृष्टिरुग्द्रव्यहानिश्च विद्वेषो बन्धुवर्गतः । देहे पित्तोद्भवा पीडा वर्षादौ व्ययगे रवौ ॥ ( चन्द्र का ) [१]वेदनाऽक्षिविकारौ च कासश्वासादिपीडनम् । देहे कफोद्भवा पीडा वर्षादौ लग्नगे विधौ ॥ [२]इष्टस्थानगतं सौख्यं धनाप्तिः श्वेतवस्तुतः । शरीरे परमारोग्यं वर्षादौ द्वितीये विधौ ॥ [३]सुखं

लाभं जयं पुंसां धनागमं तु विक्रमात् । धर्मे बुद्धि-र्भवेत्पुंसां वर्षादौ तृतीये विधौ ॥ सुहृद्बन्धुकलत्रादि-सौख्यं चातिधनागमम् । गोमहिष्यादिप्राप्तिश्च वर्षादौ तुर्यगे विधौ ॥ स्त्रीसुखं विजयं मानं राजपूजा धना-गमम् । सुबुद्धिः सन्ततेः प्राप्तिर्वर्षादौ पञ्चमे विधौ ॥ वातश्लेश्मादिजा पीडा विद्वेषो बान्धवैः सह । नृप-चौरोद्भवं दुःखं वर्षादौ षष्ठगे विधौ ॥ स्त्रीसुखं नृपतेर्मानं लाभं ग्रामान्तराद्भवेत् । वाणिज्याज्जलमा-र्गाच्च वर्षादौ सप्तमे विधौ । अष्टमस्थोऽल्पसन्तोषो द्रव्य-नाशमुपद्रवः । श्लेष्मचक्षुर्विकारांश्च वर्षादौ कुरुते विधुः ॥ नवमे धर्मलब्धिश्च मनःसन्तोषमेव च । यशोवृद्धिर्नृपा-न्मानो वर्षादौ चन्द्रमा यदि ॥ द्रव्यागमं शत्रुनाशो

रोगनाशं विशेषतः । प्रतिष्ठा कीर्तिलाभश्च वर्षादौ दशमे विधौ ॥ [११]वस्त्रपुत्रादिकप्राप्तिर्धनं स्वालयसम्भवम् । श्वेतक्रियाणकाल्लाभो वर्षे लाभस्थिते विधौ ॥ [१२]द्रव्यक्षयं क्षुधाल्पत्वं नेत्ररुक्कलहं गृहे । वर्षकाले व्ययस्थाने चन्द्रः कुर्यादिदं फलम् ॥ ( भौम का ) [१]मूर्ध-वक्त्राक्षिरोगाश्च कलहं च धनक्षयम् । रक्तपित्तप्रकोपश्च कुरुते लग्नगः कुजः ॥ [२]वह्निचौरनृपादिभ्यो भयं वा त्रिभवव्ययम् । दृशोरुक्कामिनीकष्टं धनस्थे धरणीसुते ॥ [३]नृपमानं धनप्राप्तिर्द्रव्यनाशो निरामयम् । गेहे महोत्सवो नित्यं तृतीये भूमिनन्दने ॥ [४]देशाटनं सकष्टं च हृदि दुःखं सखक्षयम् । कुटुम्बकलहं चैव चतुर्थे भूमिनन्दने॥ [५]पुत्रार्तिः कामिनीकष्टं व्याधिश्चोदरे नृणाम् ।

दुर्मतिः स्वजनैर्वैरं पञ्चमे भूमिनन्दने ॥ ईष्टस्वजनतः सौख्यं धनलाभं रिपुक्षयम् । प्रमोदः स्वमतेर्माणां षष्ठस्थानगते कुजे ॥ जायाकष्टं तथा हानिः पीडा ह्यात्मन एव च । देशभ्रंशोद्भवां भीतिं कुर्याद्भौमस्तु सप्तमे ॥ रक्तपित्तप्रकोपश्च महापीडा धनव्ययम् । विपत्तिरिष्टवर्गस्य ह्यष्टमस्थे धरासुते ॥ पापलब्धिर्भवेत्पुंसामुद्वेगं विभवव्ययम् । कलहं बन्धुवर्गैश्च नवमे धरणीसुते ॥ व्यापारं धनलाभश्च प्रसादं भूमिपालतः । तेजोवृद्धिस्तथाऽरोग्यं दशमस्थे धरासुते ॥ जायापुत्रसुहृत्सौख्यं प्रतापो विभवागमः । शत्रुनाशं नृपात्सौख्यं लाभगे भूमिनन्दने ॥ दृशोरोगं वपुःपीडा धननाशं नृपाद्भयम् । सुतजायादिजं दुःखं हायने द्वादशे कुजे ॥

( राहु व केतु का ) देहे [१]मरुत्कृता पीडा कलहं विभवव्ययम् । जायापुत्रादिजं कष्टं राहौ (केतौ) वर्षे विलग्नगे॥ [२]धनव्ययमनारोग्यं चिन्ता वस्त्यादिपीडनम् । वक्त्रलोचनपीडा च राहौ ( केतौ ) वर्षे धनस्थिते ॥ [३]राजमानं तथैश्वर्यमारोग्यं विभवागमम् । शत्रुक्षयः सुहृत्सौख्यं राहौ ( केतौ ) वर्षे तृतीयगे ॥ [४]चिन्तादुःखं प्रवासश्च विवादः स्वजनैः सह । चतुष्पदः क्षयं यान्ति राहौ ( केतौ ) वर्षे चतुर्थगे ॥ [५]पुत्रसौख्यं सुतप्राप्तिर्दुर्मतिर्वैरिविग्रहः । नियतं जठरे पीडा राहौ ( केतौ ) पञ्चमगे सदा ॥ [६]नृपप्रसादमारोग्यं धनलाभो रिपुक्षयम् । कलत्रपुत्रजं सौख्यं राहौ ( केतौ ) षष्ठे तु हायने ॥ [७]प्रवासः पीडनं चाङ्गे स्त्रीकष्टं पवनो-

स्थरुक् । कटिवस्तौ भवेत्पीडा राहौ ( केतौ ) जायास्थिते भवेत् ॥ धनव्ययमऽनारोग्यं विद्वेषो बन्धुभिः सह । स्त्रीकष्टं च प्रवासं च राहुः ( केतुः ) कुर्यात्तथाऽष्टमे ॥ विद्वेषैश्च वपुःपीडा दैन्यं राजादिपीडनम् । धर्मकार्ये विलम्बः स्यात् राहौ ( केतौ ) वर्षे तु धर्मगे ॥ [10]व्यापाराद्धनहानिश्च भयं भूपालसम्भवम् । मुखे दैन्यं प्रवासश्च राहौ ( केतौ ) वर्षे तु कर्मगे ॥ [11]शरीरारोग्यमैश्वर्यं स्त्रीसुखं विभवागमः । सङ्कीर्णवर्णतो लाभो राहु ( केतु ) र्लाभगतो यदा ॥ [12]धनव्ययं च कष्टं च राजपीडा रिपोर्भयम् । जायापीडा भवेन्नित्यं राहौ ( केतौ ) वर्षे तु द्वादशे ॥ ( जीव का ) सौख्यं पुत्रकलत्रादेर्वपुरारोग्यसन्मतिः । लाभं सेवासुखं भूपान्मानं

लग्नगते गुरौ ॥ [२]धनलाभं तथारोग्यं प्रमोदो बन्धुवर्गतः । प्रचण्डसदृशैर्भोगैर्देवेज्ये धनगे भवेत् ॥ [३]लाभालाभौ सुखं दुःखं शत्रुमित्रैश्च सङ्गमम् । नृणां स्त्रीपक्षतः सौख्यं सेवायाश्च सुखे गुरौ ॥ [४]जायापुत्रसुहृत्सौख्यं नृपमानं धनागमम् । भूमिवाहनविद्याप्तिश्चतुर्थे हायने गुरौ ॥ [५]सुबुद्धिः सन्ततेः प्राप्तिः सौख्यं लाभो भवेन्नृणाम् । इष्टमित्रकृतं सौख्यं पञ्चमस्थे सुरार्चिते ॥ [६]रिपुवृद्धिमनारोग्यं धननाशं बलक्षयम् । इष्टस्वजनविद्वेषं षष्टे देवपुरोहिते ॥ [७]वाणिज्याद्व्यवहाराच्च मार्गाच्चैव धनागमम् । स्त्रीसुखं राजसम्मानं सप्तमे सुरमन्त्रिणि ॥ [८]धनव्ययमनारोग्यं जयापुत्रादिपीडनम् । वियोगं च विवादं च अष्टमे देवपूजिते ॥

धनलाभो राजमानं धर्मकार्यं भवेत्सदा । प्राप्नोति विविधान्भोगान्देवेज्ये नवमस्थिते ॥ सत्कीर्तिर्भूभृतो मानं धनलाभं महत्सुखम् । गेहे महोत्सवं नित्यं देवेज्ये दशमे यदि ॥ आयुरारोग्यमैश्वर्यं जायापत्यसुहृत्सुखम् । नृणां चतुष्पदप्राप्तिर्लाभस्थाने यदा गुरुः ॥ स्वजनैर्विग्रहं दुःखं क्षयोत्पत्तिर्धनव्ययः । प्रवासो नृपतेर्भीतिर्देवेज्ये व्ययसंस्थिते ॥ (शनि का) कफमारुतकोपं च शिरोजठरपीडनम् । इष्टद्वेषं वक्त्रपीडा वर्षे लग्नगते शनौ ॥ पीडा वक्त्रे तथा नेत्रे धननाशो नृपाद्भयम् । पुत्रजायादिजं कष्टं द्वितीये रविनन्दने ॥ सर्वदुःखादिमोक्षश्च राजमानं धनागमम् । वर्षकाले यदा सौरिस्तृतीये कुरुते नृणाम् ॥ मातृपक्षैर्भवेत्कष्टं प्रवासं च

धनक्षयम् । असन्तोषो राजपीडा चतुर्थे रविनन्दने ॥ जायापत्यसुहृत्कष्टं दुष्टबुद्धिर्धनक्षयम् । उदरे वातपीडा च पञ्चमे रविनन्दने ॥ देहसौख्यं देहवृद्धिः प्रसादो भूमिपालतः । स्त्रीपुत्रजनितं सौख्यं वर्षे षष्टगते शनौ ॥ सततं गमने प्रीतिः सुहृत्कष्टं धनक्षयम् । प्रवासः शत्रुतो भीतिः सप्तमे सूर्यनन्दने ॥ रोगपीडा महाव्याधिः पुत्रजायादिपीडनम् । व्यसनं द्रव्यहानिश्च हायनेऽष्टमगे शनौ ॥ जायापुत्रसुहृत्कष्टं धननाशं नृपाद्भयम् । दुर्बुद्धिः पापबुद्धिश्च नवमे भास्करात्मजे ॥ व्यापाराद्धनहानिश्च भयं भूपालसम्भवम् । मुखे दैन्यं प्रवासश्च दशमे रविनन्दने ॥ द्रव्यागमं तथैश्वर्यमारोग्यं योषितां सुखम् । शूरस्वाम्याश्रितो लाभो वर्षे

लाभगते शनौ ॥ [12]दंदाप्तिहृदये पीडा नृविनाशं नृपा-
द्भयम् । कलहं बन्धुवर्गादौ कुर्यान्मन्दो व्ययस्थितः ॥
(बुध का) [1]देहे सौख्यं धियो वृद्धिर्नृपमानं धना-
गमम् । तेजोधैर्यातिवृद्धिश्च वर्षे सौम्ये विलग्नगे ॥
[2]शरीरे नीरुजं नित्यं द्रव्यलाभो नृणां भवेत् । इष्ट-
स्वजनजं सौख्यं रौहिणीये कुटुम्बगे ॥ [3]वर्षकाले यदा
चान्द्रिः सहजे कुरुते नृणाम् । स्ववर्गाल्पसुखं लाभं
सुहृद्बन्धुसमागमम् ॥ [4]मित्रस्त्रीबन्धुजं सौख्यं चतुरङ्गि-
धनागमम् । वर्षे चतुर्थगश्चान्द्रिः कुरुते नियतं नृणाम् ॥
[5]जायापुत्रसुहृत्सौख्यं मानं भूपालसम्भवम् । प्राप्यते
सम्मतिः पुंसां पञ्चमे शशिनन्दने ॥ [6]शत्रुपक्षविवृद्धिश्च
विवादं स्वजनैः सह । शरीरे रोगजां पीडां कुर्या-

त्सौम्यस्तु षष्ठगः ॥ मार्गाल्लाभोऽङ्गनासौख्यं वाणिज्याच्च धनागमम् । चन्द्रजः कुरुते नित्यं हायने सप्तमे नृणाम् ॥ लाभं सौख्यं प्रमोदं च राजपूजां रिपुक्षयम् । विदधाति नृणां वर्षे सौम्यो मृत्युस्थितो यदा ॥ [९]धर्मबुद्धिस्तथोद्वेगं दैन्यं जायादिपीडनम् । चन्द्रजः कुरुते वर्षे नवमस्थो यदा नृणाम् ॥ [१०]वाणिज्याद्राजवर्गाच्च धनलाभं सुहृत्सुखम् । बलं कान्तिविवृद्धिश्च हायने दशमे बुधः ॥ [११]द्रव्यलाभं तथाऽरोग्यं प्रभुप्रीतिविवर्धनम् । शुभक्रियाणकाल्लाभो लाभस्थाने यदा बुधः ॥ [१२]स्वल्पलाभमनारोग्यं बहुव्ययं नृपाद्भयम् । स्ववर्गे कलहं नित्यं कुर्यात्सौम्यस्तु रिष्फगः ॥

( शुक्र का ) सौख्यं लाभं प्रमोदं च कुलवृद्धिर्भवेन्नृ-

णाम् । लाभं भूमिपतेर्दत्ते दैत्येज्यो लग्नगो यदा ॥
धनलाभं सुहद्वृद्धिः स्त्रीसुखं शत्रुसंक्षयम् । कान्तिवृ-
द्धिर्नृणां देहे दैत्येज्यो धनगो यदा ॥ तृतीयेऽल्प-
सुखं पुंसां धनव्ययमुपद्रवम् । विवादं स्वजनैः सार्धं
वर्षे दैत्यपुरोहिते ॥ नृपमानमथैश्वर्यमारोग्यं विभवा-
गमम् । भूमिवाहनविद्याप्तिर्हायने हिबुके भृगौ ॥ जाया-
पुत्रादिजं सौख्यं सुबुद्धिं विभवागमम् । विद्याविज्ञान-
कौशल्यं पञ्चमे भृगुजे नृणाम् ॥ वातश्लेष्मोद्भवा पीडा
क्षयोत्पत्तिर्धनक्षयः । महाभयं गृहे कष्टं वर्षे षष्टगते
भृगौ ॥ दयितापुत्रजं सौख्यं वाणिज्याद्विभवागमः ।
मार्गाल्लाभं प्रमोदं च सप्तमे भृगुजे नृणाम् ॥ अल्प-
भाग्यमनारोग्यं कलहं मित्रवर्गतः । धर्मनाशं प्रवासं

च भृगुपुत्रेऽष्टमस्थिते ॥ [९]शरीरे चैवमारोग्यं सुबुद्धिर्विभवागमम् । जायापुत्रादिजं सौख्यं नवमे भृगुजे भवेत् ॥ [१०]नृपमानं सुहृत्सौख्यं धनलाभं रिपुक्षयम् । सर्वारम्भाः प्रसिद्ध्यन्ति दैत्येज्ये दशमे भवेत् ॥ [११]जलमार्गाद्धनप्राप्तिस्तथा शुभ्रक्रियाणकात् । प्रियागमस्तथारोग्यं लाभगे भृगुनन्दने ॥ [१२]मित्रस्वजनविद्वेषः सन्मार्गे विभवव्ययः । निःसङ्गत्वं प्रवासश्च द्वादशे भृगुजे नृणाम् ॥

इति वर्षखण्डं द्वितीयम् ॥ २ ॥

( अथ तीसरा जातकखण्ड )

( जन्मेष्टशुद्धि के लिये गर्भाधान लाना ) कहाभी ॥

विज्ञायते ज्ञानिभिरत्र पुंसां शुभाऽशुभं जन्मफलं विलग्नात् । तदुच्यते ताजिकनायकोक्ता निषेककाला-

दिह तस्य शुद्धिः ॥ १ ॥ व्यब्जाङ्गाद्व्यङ्गचन्द्राच्च गृह्लीयाद्राशितः फलम् । हीनं युक्तं भागफलैर्गणो गर्भे भवेत्तिथिः ॥ जन्मगर्भीयलग्नाऽब्जसमत्वं चेष्टशुद्धिता ॥ २ ॥ विचन्द्रलग्न व विलग्नचन्द्र के राशियों के फल से गण व तिथियों के फल से अंशफल कम व अधिक कर के गर्भ में स्थिति का अहर्गण व तिथियां होते हैं ॥

उपर गणफल नीचे तिथिफल ( कोष्ठ राशियों से रखना )

| ० | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ |
|---|---|---|---|---|---|---|---|---|---|---|---|
| २७३<br>१३ | २७०<br>५६ | २६८<br>३९ | २६६<br>२२ | २६४<br>६ | २६१<br>४९ | २५९<br>३२ | २५७<br>१६ | २५४<br>५९ | २५२<br>४२ | २५०<br>२६ | २४८<br>९ |
| २५०<br>० | २५२<br>१८ | २५४<br>३७ | २५६<br>५५ | २५९<br>१४ | २६१<br>३२ | २६३<br>५२ | २६६<br>१० | २६८<br>२८ | २७०<br>४६ | २७३<br>५ | २७५<br>२३ |

(अशंफलज्या गणफल को जोडना तिथिफलको काटना)

| | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|
| ० | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० |
| ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० |
| ४ | ९ | १३ | १८ | २३ | २७ | ३२ | ३६ | ४१ | ४६ | ५० |
| ११ | १२ | १३ | १४ | १५ | १६ | १७ | १८ | १९ | २० | २१ |
| ० | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ |
| ५५ | ० | ४ | ९ | १३ | १८ | २३ | २७ | ३२ | ३६ | ४१ |
| २२ | २३ | २४ | २५ | २६ | २७ | २८ | २९ | | | |
| १ | १ | १ | २ | २ | २ | २ | २ | गणको ऋण | | |
| ४६ | ५० | ५५ | ० | ४ | ९ | १३ | १८ | तिथिको धन | | |

उन से आधानकालिक लग्न व चन्द्र की जन्मकालिक चन्द्र व लग्न की समानता ही जन्मेष्ट की शुद्धि होती हैं॥ ( जैसा ) संवत् ५००७ श्रावदि ४ रवौ सूपूभाप्र ७। ४२ चप्र १०। ३३ अतिगण्डप्र ६। ४५ मीचंगि २५। १७ चरः रार्धं १२। ५५ कर्कांशाः १४ उदयादिष्ट ३०। ३५ ज्योतिषीशम्भूनाथजन्म ( इष्टशुद्धि के वास्ते गर्भाधान लाना ) शाकः १८५३ करणं ४११ चक्र ३७ अधिमास ४ ऊनाह २६ अहर्गण १६४८ अयनांश ०। २३। २६। १५ सूर्यस्फु ३। १६। ३। ४ चन्द्रस्फु ११। १। १०। ६ लग्न ८। २२। ६। ४६ ( गण के वास्ते ) विचन्द्र-लग्न ६। २०। ५६। ४० के राशियों ६ से उपर सारणि में गणफल २५२। ४२ को भाग २० फल १। ३६ कम कर के हुआ २५१। ६ गर्भ में स्थिति का गण, जन्माहर्गण १६४८। ३० से काट कर हुवा, चन्द्रवार पर गर्भा-

धान का द्युगण १३६७ । २४ ॥ ( तिथि के वास्ते ) विलग्न-चन्द्र २ । ६ । ३ । २० के राशियां २ से सराणि में नीचे तिथि फल २५४ । ३७ को भाग ६ फल ० । ४६ जोड के हुई, २५५ । २३ गर्भ में स्थिति की तिथियां , मासादि ८ । १५ । २३ गर्भाधान तक जन्मकाल से बीच में अधिमास होने के कारण सैक शुक्लपक्षादि सावणमान से गिनती कर के वैशाख से सावण तक जन्ममासादिकों ४ । १८ । ३१ से काट के हुई ८ । ३ । ८ वर्तमान अष्टम मगरमास की शुक्लतृतीया गत और वर्तमान चतुर्थी तिथी है । ( अब ) संवत् ५००६ के पत्री से मार्गशुदि चतुर्थ्यां चन्द्रे चंपूषांदि २४ । ५५ चदि २३ । १६ शूदि २ । २८ मंचंरा १६ । २ विष्टिशे ४ । २१ दि २३ । १६ उन्मूलं पूर्वागताऽहर्गण १३६७ से प्राभातिकसूस्प ७ । ७ । ४५ ३७ अयनों ० । २३ । २६ । ३५ से युक्त ८ । १ । २५

१२ के भोग्यांशों २८ । ३४ । ४८ का भोग्यकाल ३३० जन्मचन्द्र ११ । १ । १० । ७ सायन ११ । २४ । ३६ । ४२ कल्पितलग्न का भुक्तकाल १६३ मध्यस्थ मकर २६६ कुम्भ २३३ इन का योग १०२२ घट्यात्मक १७ । २ हुवा आधान का इष्ट, इस पर । सूस्फु ७ । ८ । १२ । ५५ चस्फु ८ । २५ । २ । ३१ लग्न ११ । ० । ५३ । ३ ( नियम है ) आधानचन्द्र जन्मलग्न से अधिक हो, तो आगतफल जन्मेष्ट को जोडना, कम हो तो, काटना । यहां जन्मलग्न ८ । २२ । ६ । ४६ आधानचंद्र ८ । २५ । २ । ३१ का अन्तर ० । २ । ५५ । ४२ अधिक है, इस लिये जोडना । सायनचन्द्र ( कल्पितलग्न ) की राशि ६ मकर के तीन अंशों का फल ३० जन्मेष्ट ३० । ३५ को अधिक कर होवा शुद्ध जन्मेष्टकाल ३१ । ५ है । ( क्योंकि ) इस पर जन्मचन्द्र ११ । १ । १० । १४ व

आधानलग्न ११ । १ । ७ । ११ और आधानचन्द्र ८ । २५ । १ । ५३ व जन्मलग्न ८ । १५ । ६ । ४६ को भी समता होती है ( इति आधान लानी की रीति ) ॥ ( द्वादशभावो की संज्ञा ) तनुर्धनं सहजं च सुहृत्पुत्रो रिपुर्वधूः । मृत्युश्च धर्मः कर्माऽयो व्ययोभावाश्च द्वादश ॥

संवत् ५००७ श्रावदि ४ रवौ शुद्धेष्टकाल ३१ । ५ पर सूर्यादिस्पष्ट सू ३ । १६ । ३ । ३२ चं ११ । १ । १० । १४ भौ ५ । ६ । ३१ । २१ बुध ४ । ७ । ४७ । १६ जी ३ । १२ । ३६ । ११ शु ३ । ७ । १७ । ५१ श ८ । २३ । २० । ३१ रा ११ । १५ । २३ । २८ लं ८ । २५ । ६ । ५० दशमलं ६ । १४ । २६ । ४७ । जन्मचक्र ॥ धंलश मीचंरा कसूजीशु सिंबु कंभौके भावचक्र । १ श ३ चंरा० ७ सू० जी० शु ८ बु० ६ भौके०

होराचक्र[२] । [१]कलंचंभौजीशुश , [२]सिंसूबु ॥

द्रेकाणचक्र[३] । [१]सिंलंश [२]कंभौ [४]वृंसूजी [८]मीचं [१२]कंबुशु

सप्तांशचक्र[४] । [१]वृंलंश [५]कंचंबु [६]तुंजी [१०]कुंशु [१२]मेसूभौ

नवांशचक्र[५] । [१]वृंलंसूश [४]कुंभौ [८]मिबु [९]कंचं [११]कंशु [१२]तुंजी

द्वादशांशचक्र[६] । [१]तुंलं [२]वृंभौबु [३]धंजी [४]मंसू [६]मीचं [१२]कंशुश

त्रिंशांशचक्र[७] । [१]मिलंश [४]कंभौशु [९]कुंबु [१०]मीसूजी [१२]वृंचं

( बल के विचार विना जातक का फल न कह सकता है , इस लिये स्थान , दिक् , काल , निसर्ग , चेष्टा , दृष्टि से , छः प्रकार बल में (प्रथम) उच्च , सप्त-वर्ग , युग्मायुग्म , केन्द्रादि , द्रेकाण से (पञ्चधा) स्थान-बल में से उच्च व सप्तवर्गी का बल कहता है ) नीचोनो भगणाच्च्युतः षडऽधिकः षड्हृत्तदोच्चं बलं , स्वर्क्षे-

ऽर्धं समभेऽष्टमस्त्रिचरणा मूलत्रिकोणे बलम् । मित्रत्त-ऽङ्घ्रिरऽर्धीष्टभे त्रय इभांशा वैरिभेऽष्ट्यंशको दन्तांशो-ऽध्यरिभे गृहाधिपवशात्खेटस्य सप्तैक्यजम् ॥

( उच्चबल ) सूर्यस्पष्ट ३ । १६ । ३ । ३२ स्वनीच ६ । १० से हीन होवा ६ । ६ । ३ । ३२ छुः से अधिक होने के कारण बाराह से ऊनित होवा २ । २३ । ५६ । २८ छुः से लब्ध ० शेष २ साठ से गुणित १२० नीचले २३ । ५६ । २८ अंशात्मक होने के कारण दोगुणे फल ४७ ५२ । ५६ से युक्त १६७ । ५२ । ५६ छुः से लब्ध २७ । शेष ५ साठ से गुणित ३०० नीचले ५२ । ५६ फल से युक्त ३५२ । ५६ छुः से लब्ध ५८ शेष ४ साठ से गुणित २४० नीचले ५६ फलयुक्त २९६ छुः से लब्ध ४६ शेष २ छोडना, लब्ध एकट्ठा ० । २७ । २८ । ४६ हुआ

सूर्य का उच्चबल, ऐसा औरों को भी उच्चबल बनाना ॥ ( सप्तवर्ग का बल ) स्वगृह में एककला का आधा ३० । ०' सम में अष्टमांश ७ । ३० मूलत्रिकोण में तीन पाद ४५ मित्र में एकपाद १५ अधिमित्र में त्रिगुणा अष्टमांश २२ । ३० शत्रु में सोलमा भाग ३ । ४५ और अधिशत्रुगृह में बतीसमा भाग १ । ५२ । ३० बल है परन्तु ग्रहों का बल " गृहाधिपवशात् " यानि जिस घर में ग्रह होवे, उस घर के स्वामी से सप्तवर्गी में बल रखना ॥ ( जैसा ) जन्मकुण्डली में सूर्य कर्कट में है, उस का स्वामी चन्द्र मीन में है, मीन का स्वामी बृहस्पति चन्द्र का शत्रु है, इस लिये शत्रु का बल ३ । ४५ आया है । ऐसा होरादिकों का भी बल रखना । एकट्ठा सप्त वर्गी बल होता है ॥ यह पञ्चधामैत्रीचक्र से स्फुठ होता है ॥ तत्रादौ ( तात्कालिकशत्रुमित्र ) अन्योन्यस्य धनव्यये

ऽयंसहजव्यापांरबन्धुस्थिताः । तात्काले सुहृदः स्व-
तुङ्गभवनेप्येतेऽरयस्त्वन्यथा ॥ आपस में जन्मकुण्डली
में २, ३, ४, १०, ११, १२ स्थानों में मित्र और स्थानों
१, ५, ६, ७, ८, ९ में अपने उच्चराशि का भी स्वामी शत्रु
है ॥ और पञ्चधा अधिमित्रादिचक्र भी नैसर्गिक व तात्का-
लिक मित्रादिचक्रों से कल्पना करना ॥ (नैसर्गिक) द्विधा-
मैत्री, त्रिधामैत्री, और पञ्चधामैत्रीचक्र भी कर के सप्तवर्गी
का बलचक्र करना ॥ अगले चक्र स्पष्ट एकट्ठा रखोंगा ॥

(दृष्टि) खैकाऽग्निद्विखवेदरामयमभूखाभ्रांभ्रमेकादिभे ।
दृष्ट्या वर्जितदृश्यकस्य गुरुणा चेदष्टवेदे कृताः । मन्दे-
नाऽङ्कयमेऽष्टजा नगगुणेऽङ्का भादिजाः संस्कृताः भाग-
घ्नत्रयवृद्धिखांऽनललवेनाऽब्ध्युद्धृता दृग्भवेत् ॥

दृष्टा चन्द्र ११ । १ । १० । १४ से दृश्य रवि ३ । १६ ।

३। ३२ हीन होवा ४।१४।५३। १८ चार राशि का फल २। अग्रिम० अन्तर २ ऋणात्मक से भागादि १४। ५३। १८ गुणित २६। ४६। १६ तीस ३० से भाजित ०। ५६। ३२ आगतफल २ को ऋण कर के होवा १। ०। २८ चार से भाजित होवा ०। १५ ७ सूर्य पर चन्द्रकी दृष्टि॥ इसी रीति से औरों की दृष्टि करना॥ ( योगिनीदशा ) स्वर्क्षं त्रिभिर्युतं चाष्टतष्टं शेषं दशा भवेत्। मङ्गला पिङ्गला धन्या भ्रामरी भद्रिकोल्किका। सिद्धा च सङ्कटा चैकवृद्ध्या वर्षैर्दशेश्वराः। चन्द्राऽर्कसौम्यभौमेज्यसौरिशुक्राऽगवः क्रमात्। शून्यं च संकटा ज्ञेया षट्त्रिंशद्भाजिताऽन्तरम्॥ वर्षादयः क्रमाद्दिग्भिः खांद्वैः खाभ्रेन्दुभिर्हताः। विशेषे मङ्गलाभोगो ज्ञेयोऽसौ दिवसा-

त्मकः ॥ ( जैसा ) स्वर्क्ष पूर्वभाद्रपदा २५ तिन युक्त २८ आठ ८ से भाजित शेष चार आई भ्रामरी का स्वामी भौम की दश प्रथम वह लिखना। उस के पीछे और लिखना। अन्तर्दशा के वास्ते भ्रामरीका समय चारवर्ष है, उन के छ:तीस से भाग देकर वर्ष आदि ध्रुवक निकलता है ० । १। १० भ्रामरी अन्तर में लिखना, मङ्गला से शिरो करना, इसी रीती से भ्रामर्यां भ्रामरीविशेषदशा का ध्रुवक भी ०।०।४।२६।४० करना चाहिये ॥ यद्वा भ्रामर्यऽन्तर ०।५।१० के वर्षादिकों को इन १०।५०।१०० से गुणित ०।२५०।१००० साठ से नीचले लब्ध उपरि देकर हुवा यही दिनात्मक भ्रामरी विशेष का ध्रुवक ४।२६।४० मङ्गला से शिरो करना ( विंशोत्तरीदशा )

जन्मर्क्षसंख्या द्व्यूना स्यान्नवभक्ता दशापतिः ।
शेषं सूचंभराजीशबुकेश इति नामकः ॥ पर्द् दशं

सप्त धृतयः षोडश नवभूमयः । सप्तभुवः तथा सप्त विंशतिश्च दशावधि ॥ आ पञ्चचत्वारिंशद्धयातनाड्यश्चतुर्गुणाः । दिना द्वादशमासोना ध्रुवकोऽयं दशाभिधः ॥ वर्षाणि त्रिगुणीकृत्य मासाः पञ्चदशाहताः । दिनार्धं प्रक्षिपेदूर्ध्वं ध्रुवकोऽन्तर्दशाभिधः ॥ क्रमतो हि समैरथाऽऽदिमा जनिभस्था घटिकाः समाहताः । भभोगेन भक्ताः फलं भुक्तपाकस्तदूना दशा सा भवेद्भोग्यसंज्ञा ॥ ( जैसा ) जन्मर्क्ष पूभा की संख्या २५ दोनों २ हीन २३ नौ ९ से शेष रहा ५ हुई प्रथम जीव की दशा ( काश्मीरिकसंस्कार ) पञ्चतालीस तक चार से गुणित दिनात्मक नक्षत्रगतघटी बाराह १२ मासों से काटे हुई दशा का ध्रुवक, याने उस से गुणित जिस २ ग्रह के वर्ष हों उस २ ग्रह की दशामान होवे ।

किन्तु ४५ पञ्चतालीस से एक ही ध्रुवक रहेगा ॥ ( जैसा ) नक्षत्रगतघटी ५५ । ३७ यहां पञ्चतालीस ४५ घटी चौगुणा १८० दिनात्मक है । मासात्मक ६ । ० बारह १२ । मासों से हीन हुवा वर्षादिक ० । ६ । ० दशाका ध्रुवक । इस से सूर्य के छः वर्ष गुणित हुवा वर्षादि ३ । ० । ० चन्द्रके दसवर्ष १० गुणित हुई , वर्षादि ५ । ० । ० (इस पर नियम यह है) " रवीन्दू गीष्पतिः सौम्यो राहुः सौरः सितो रवेः । सध्रुवात्कुजकेतू चाऽग्रतः सर्वे पृथक्ग्रहाः " याने सूर्य ३ चन्द्र ५ का योग ८ जीवदशा है । तथा ध्रुव ० । ६ । ० युक्त जीव ८ से बुध ८ । ६ । ० से राहु ९ । ० । ० से शनि ९ । ६ । ० से शुक्र १० । ० । ० है और सूर्य ३ । ० । ० ध्रुव ० । ६ । ० युक्त ३ । ६ । ० भौम व केतु का दशापाक होता है ॥ ( अन्तर्दशा ) "जैसा" जीवदशा के वर्ष ८ । ० । ० त्रिगुण २४ मासादिक न होने से वही दिनादिक

भुक्त हुवा। उक्तरीति से सूर्य के छु वर्ष से गुणित १४४ वर्षादि ०।४।२४ चन्द्र १० के गुणित ०।८।०।० जीव १।०।२४ बुध १।१।१८।० राहु १।२।१२।० शनि १।३।६।० शु १।४।०।० भौ ०।५।१८।० के ०।५।१८।०॥ (भुक्त भोग्य करणे की विधि यह है)

दशापति के वर्षों से गुणित नक्षत्रभुक्तघटियों के नक्षत्र भोगघटियों से भाजित का वर्षादिक फल भुक्तसंज्ञक होता है दशापति के वर्षों से काटकर शेष दशा का भोग्य काल होता ॥ (जैसा) श्रावदि ४ रवौ पूर्भाप्र ७।४२ इष्ट ३१।५ भयात के वास्ते कल (ह्यस्तन) दिन तृतीया शनौ शतांप्र १।१६ रात्रिमान से २५।४८ काटकर २४।३२ इष्ट से ३१।५ युक्तकर हुवा भयात ५५।३७ और भभोग के वास्ते शतांप्र १।१६ व पूभांप्र ७।४२ का अन्तर ६।२२ आगले भयात ज्यादा होने के कारण साठ ६० से युक्त होवा ६६।२२ भभोग॥ अब भयातघटिका

५५। ३७ दशेश्वर जीव के दशा वर्षों १६ से गुणित ८८० । ७६२ सवर्णित को ५३५६२ भभोग ६६ । २२ सवर्णित ३६८२ से भाग देकर पाये, वर्ष १३ शेष १८२६ द्वादश गुणित से २१६६२ पाये ५ शेष २००२ तीस गुणित से ६००६ पाये १५ दिन, शेष ३३० साठ से गुणित १६८०० से पाये घट्यादि ४ । ५४ इकट्ठा होवा भुक्तकाल १३ । ५ । १५ । ४ । ५४ दशेश्वर वर्षों १६ से काटा आया दशा का भोग्यकाल २ । ६ । १४ । ५५ । ६ ऐसा ही और ग्रहों को भी भुक्त व भोग्यकाल लाना ॥

( भावेशोंका फल प्रथमलग्नेश का ) नीरोगो तनुपे लग्ने दीर्घजीवी महाबली । भूपतेर्भूमिलाभी स्यात् सुखी प्रथितसद्यशः ॥ १ ॥ लग्नेशे धनगे स्वाढ्यो दीर्घायुः स्थूलदेहयुक् । प्रतिष्ठां लभतेऽत्यर्थं सत्कर्मनिरतो भवेत् ॥ २ ॥ लग्नपे सहजे श्रेष्ठबन्धुमित्रादिसंगतः । धर्मी

दाताऽतिशूरश्च बलिष्ठः प्रभवेन्नरः ॥ ३ ॥ लग्नेशे तुर्यगे भूपप्रियं प्रचुरजीवितम् । स्निग्धं पित्रोर्भक्तिरतं नितरां कुरुते नरम् ॥ ४ ॥ लग्नेशे पञ्चमे पुत्रान्वितं वैरागिणं नरम् । प्रथितं सुस्थितं नृत्यगीतादिकलयाऽन्वितम् ॥ ५ ॥ लग्नेशे शत्रुगे स्वस्थो भूमिलाभी धनी बली । शत्रुघ्नो धर्मपत्नी च भवेत्स्वकुलदीपकः ॥ ६ ॥ लग्नेशे सप्तमे शीली तेजस्वी गुणभूषितः । तद्भार्यापि रूपवती सुशीला चतुराशया ॥ ७ ॥ लग्नेशे मृत्युगे स्वाढ्यः कृपणः स्वस्थआयुषा । क्रूरे काणः शुभैः पीनो विद्याविनयवर्जितः ॥ ८ ॥ लग्नेशे नवमे श्रीमान्बन्धुश्लाघी सुमित्रवान् । सुकृती च सुशीली च तेजस्वी ख्यातक-

र्मकृत् ॥ ९ ॥ लग्नेशे दशमे भूपमानी पण्डितधीरतः । गुरुमात्रऽर्चनरतो लाभैः सर्वैरधिष्ठितः ॥ १० ॥ लग्नेशे लाभगे पुत्रशौर्यधैर्यबलान्वितः । तेजस्वी व्यवहारेषु निपुणो जायते नरः ॥ ११ ॥ लग्नेशे द्वादशे तीक्ष्णभाषी सुनिष्ठुराशयः । बन्धुषु मलिनो नित्यं विदेशी दत्तभुक्तवान् ॥ १२ ॥ ( धनेश का )

धनेशे लग्नगे श्रीशं कृपणं व्यवसायिनम् । सुकर्माणं भूपतुल्यभोगिनं नृपसंमतम् ॥ १ ॥ धनेशे धनगेऽनल्पभोगवित्तस्य भाजनम् । मणिरत्नधातुपरं करोति विविधार्थिनम् ॥ २ ॥ धनेशे सहजे सौम्ये बन्धुहीनं विवृत्तिकम् । क्रूरं भौमे भूपशत्रुं तस्करं च कुकर्मिणम् ॥ ३ ॥ धनेशे तुर्यगे सौम्ये पितृद्रव्या-

न्महोदयी । लक्ष्मीवान् कर्मनिष्णातः क्रूरे च व्यसनावृतः ॥ ४ ॥ धनेशे पुत्रगे स्वाढ्यः कर्मदक्षः कुकर्मवित् । व्यसनैर्दुःखभाग्नित्यं जायते पुरुषः खलु ॥ ५ ॥ धनेशे रिपुगे सौम्ये धनसंग्रहतत्परम् । रिपुघ्नं भूमिसंयुक्तं पापे तु धनवर्जितम् ॥ ६ ॥ धनेशे सप्तमे सौम्ये दानशौण्डं यशस्विनम् । तद्भार्या धनधीयुक्ता क्रूरे वन्ध्या भवेद्ध्रुवम् ॥ ७ ॥ धनेशे मृत्युगे त्वात्मघातको हस्तपात्रकः । उत्पन्नभुग्विलासी च परहिंसी स्वदैवभुक् ॥ ८ ॥ धनेशे नवमे सौम्ये वदान्यो बन्धुप्रीतिकृत् । क्रूरे दुर्गतितो भिक्षुर्विलम्बवृत्तिकारकः ॥ ९ ॥ धनेशे दशमे भूपमान्यो वन्द्योऽथवा नृपः । सौम्ये शृङ्गाराढ्यो मातापित्रोश्च पालको

भवेत् ॥ १० ॥ धनेशे लाभगे ख्यातो व्यवहारी श्रियास्पदः । लोकौघपालको नित्यं परव्यसनहारकः ॥ ११ ॥ धनेशे द्वादशे क्रूरे भिक्षुकश्चटुलोऽलसः । कर्मण्यऽनिष्टभिक्षाशी सौम्येऽतिसुखितो भवेत् ॥ १२ ॥

(सहजेश का) भ्रात्रीशे लग्नगे वाग्मी लुम्पटः स्वजनार्तिहृत् । सेवारतः कूटकरो लोभी च जायते नरः ॥ १ ॥ भ्रात्रीशे धनगे क्रूरे भिक्षुर्व्यर्थोऽल्पजीविकः । बन्धुविरोधी सौम्ये तु धनवानीश्वरः पुमान् ॥ २ ॥ भ्रात्रीशे भ्रातृगे सर्वसुहृदं समस्तवकम् । देवगुर्वार्चनरतं नृपाल्लाभास्पदं सदा ॥ ३ ॥ भ्रात्रीशे तुर्यगे पाल्यः पितृबन्धुसहोदरैः । मात्राविरोधी स्वपितुर्वित्तस्य भोजको भवेत् ॥ ४ ॥ भ्रात्रीशे

पञ्चमे मान्यो बन्धुपुत्रसहोदरैः । दीर्घायुश्चोपकारी च तेजस्वी स्निग्धवाग्भवेत् ॥ ५ ॥ भ्रात्रीशे शत्रुगे बन्धु-विरोधी नेत्ररुग्युतः । भूलाभी भवत्यऽत्यर्थं मध्ये रोगैश्च पीडितः ॥ ६ ॥ भ्रात्रीशे सप्तमे सौम्ये भार्या शीलवती सती । सुरूपा सम्भवेत्क्रूरे देवरमऽनुगामिनी ॥ ७ ॥ भ्रात्रीशे मृत्युगे सौम्ये सोदरैरहितं नरम् । क्रूरे बाह्वो-र्विकलितं न जीवन्तं चिरन्तनम् ॥ ८ ॥ भ्रात्रीशे नवमे क्रूरे धर्मभ्रष्टस्तथा शठः । सौम्ये तु बान्धवैः श्लाघ्यः सुकृती सोदरादियुक् ॥ ९ ॥ भ्रात्रीशे दशमे भूपमान्यो भ्रातृसुखास्पदः । धनी यशस्वी मानी च निश्चितं जायते नरः ॥ १० ॥ भ्रात्रीशे लाभगे बन्धुश्लाघी च भूपपूजितः । भोगी सुहृद्धि-

तकरो जायते धर्मतत्परः ॥ ११ ॥ भ्रात्रीशे व्ययगे मित्रैर्विरोधी बन्धुद्वेषकृत् । विदेशवासी सततं बन्धुभ्यो दुष्टशेमुषी ॥ १२ ॥ ( तुर्येश का ) तुर्येशे लग्नगे पितृपुत्रौ सुस्नेहसंवृतौ । पितृपक्षीयविद्वेषी पितृनाम्नैव विश्रुतः ॥ १ ॥ तुर्येशे धनगे क्रूरे द्वेषी बन्धुषु दुष्टधीः । सौम्ये पित्रोर्विधेयः स्यात्सर्वबन्धुषु संमतः ॥ २ ॥ तुर्येशे भ्रातृगे पितृमात्रोर्नित्यं हि दुःखदः । तद्बन्धुपालको वैरात्कुकर्मी नेष्टचेष्टकः ॥ ३ ॥ तुर्येशे तुर्यगे स्वाढ्यो भूपसम्मानसंश्रयः । विख्यातः पितृद्रव्याप्तः सुकर्मी सुसुखास्पदः ॥ ४ ॥ तुर्येशे पञ्चमे पितृभक्तमाढ्यं चिरायुषम् । कुटुम्बिनं धर्मयुक्तं कुरुते सततं नरम् ॥ ५ ॥ तुर्येशे शत्रुगे क्रूरे धननाशी

सुवैरिकृत् । नित्यं पित्रोर्दुःखदायी सौम्ये द्रव्यादिसञ्चयी ॥ ६ ॥ तुर्यंशे सप्तमे क्रूरे शुश्रूोः सम्पीडते वधूः । सौम्ये पालयति भक्त्या सिते भौमे सुशीलतः ॥ ७ ॥ तुर्यंशे मृत्युगे क्रूरे रोगाक्रान्तं कुकर्मिणम् । धनैर्हीनं चलं चित्ते प्रियापथ्यं सुदुःखितम् ॥ ८ ॥ तुर्यंशे नवमेऽसङ्गी पितरि समाशिल्पवित् । पितृधर्मसुसङ्ग्राही निरपेक्षश्च बन्धुषु ॥ ६ ॥ तुर्यंशे दशमे पापे ससुतां दयितां त्यजेत् । म्रियते त्वन्यजायां तु पिता सौम्येऽन्यतत्परः ॥ १० ॥ तुर्यंशे लाभगे धर्मी पितृभक्तः सुकर्मकृत् । बहुपुत्रश्चिरायुश्च नीरोगो वीतशत्रुकः ॥ ११ ॥ तुर्यंशे द्वादशे पित्रोर्मृत्युदश्च विदेशकृत् । क्रूरे त्वन्यपितुर्जन्म वाच्यं

दुष्कर्मदुर्मतिम् ॥ १२ ॥ ( सुतेश का ) सुतेशे लग्नगे तोकतनयैर्विरलः सुधीः । शास्त्रविद्गीतवित्सुष्टुकर्मकृच्च भवेन्नरः ॥ १ ॥ सुतेशे धनगे पापे गीताभ्यङ्गं गतं धनैः । व्यङ्गं भुजैः प्रतिष्ठाप्तं कुरुते मानुषं सदा ॥ २ ॥ सुतेशे सहजे स्निग्धवाचं सुजनविश्रुतम् । कुटुम्बिनं बन्धुहितं भक्त्या तैरपि समतम् ॥ ३ ॥ सुतेशे तुर्यगे सौम्ये पित्रोऽनिष्टरतं रहः । क्रूरे विरोधिनं पित्रोः साक्षात्तु जननीप्रियम् ॥ ४ ॥ सुतेशे पञ्चमे ख्यातं बुद्धिमन्तं सुमानिनम् । सुतवन्तं धनाढ्यं च वाग्मिनं कुरुते नरम् ॥ ५ ॥ सुतेशे शत्रुगे पापे शस्त्रतुल्याङ्गसंयुतम् । हीनं रोगैः सदा निःस्वं करोति त्यक्तबान्धवम् ॥ ६ ॥ सुतेशे सप्तमे जाया ससुता सुभगा

सती । देवद्विजगुरुभक्ता सुशीला चास्य भाविनी ॥ ७ ॥ सुतेशे मृत्युगेऽश्लीली कटुभाषी च निःस्वकः । नाट्यकर्मपटुर्व्यङ्गो बन्धुभिस्तनयैर्वृतः ॥ ८ ॥ सुतेशे नवमे भूपमान्यं धन्यं सुबोधिनम् । कविं सुगीतनिरतं नाटकेरसिकं नरम् ॥ ९ ॥ सुतेशे दशमे भूपकर्माणं भूपसम्मतम् । सत्कर्मनिरतं ख्यातं जननीहितकारकम् ॥ १० ॥ सुतेशे लाभगे शूरः सुतवान्सुकृतिप्रियः । गीतादिकुशलो राज्ञो लाभयुग्जायते नरः ॥ ११ ॥ सुतेशे द्वादशे क्रूरे निष्पुत्रोऽथ शुभे युतः । पुत्रैरपि तद्दुःखदो विदेशी विमनाः सदा ॥ १२ ॥ ( षष्ठेश का ) षष्ठेशे लग्नगे नीरुक् सबलोऽनेकपद्मगः । कुटुम्बकष्टकारी च वैरिघ्नः स्वैरचारकः

॥ १ ॥ षष्ठेशे धनगे दुष्टे रिपुव्याप्तोऽतिदुष्टधीः ।
व्याधिग्रस्तो भवेत्सौम्ये सुकृती शीतलाशयः ॥ २ ॥
षष्ठेशे सहजे क्रूरे दुष्टं स्वापितृघातकम् । युद्धोत्सुकं
कुमार्गस्थं सङ्ग्रामेष्वऽतिदुःसहम् ॥ ३ ॥ षष्ठेशे तुर्यगे
पितृतनयौ वैरिणौ मिथः । अस्य पिता गदैर्ग्रस्तो
लक्ष्मीं च लभते बहु ॥ ४ ॥ षष्ठेशे पञ्चमे क्रूर
वैरिणोः पितृपुत्रयोः । मिथो मृतिस्तथा सौम्ये निःस्वो
दुःखी दुराशयः ॥ ५ ॥ षष्ठेशे शत्रुगे नीरुक् वैरी
भोगी कदर्यधीः । जन्मतोऽपि न सीदेत प्रतिष्ठां
लभते पराम् ॥ ६ ॥ षष्ठेशे सप्तमे क्रूरे भार्या चण्डी
सुदुःखदा । स्वैरचारी त्वथ सौम्ये वन्ध्या वा गर्भघा-
तिनी ॥ ७ ॥ षष्ठेशे त्वऽष्टमे सूर्ये सिंहात्सर्पात्कुजे

रुजः । शनौ वधोऽथ निःश्वासी जीवे शुक्रे च नेत्र-
रुक् ॥ ८ ॥ षष्ठेशे नवमे क्रूरे बन्धुद्वेषी च याचकः ।
शास्त्रद्वेषी च दुष्कर्मा नितरां नीचकर्मकृत् ॥ ६ ॥
षष्ठेशे दशमे क्रूरे मातृद्विट् दुष्टकर्मकृत् । धर्मी पुत्र-
कुटुम्बी च मातृपक्षीयवैरिकृत् ॥ १० ॥ षष्ठेशे लाभगे
क्रूरे मरणं शत्रुतो भवेत् । तस्करैः कृतहानिः स्याच्च-
तुष्पाल्लाभसंयुतः ॥ ११ ॥ षष्ठेशे द्वादशे धान्यद्रव्य-
नाशकरः परम् । व्यापाराद्द्रव्यहानिः स्यात्तथा दैव-
परं नरम् ॥ १२ ॥ ( जायेश का ) जायेशे लग्नगे
स्तोकस्नेहमऽन्योत्सुकं प्रियम् । भोगिनं रूपयुक्तं च
दयिताखण्डिताशयम् ॥ १ ॥ जायेशे धनगे दुष्टद-
यितस्तद्दुःखितः सदा । अन्यस्त्रीहृताचित्तश्च तत्स्त्रीश्चा-

न्यरता भवेत् ॥ २ ॥ जायेशे सहजे स्वात्ममानी दुःखी सुहृद्धितः । तज्जायान्यरता दुष्टा क्रूरे त्वन्यकुटुम्बिनी ॥ ३ ॥ जायेशे तुर्यगे लोलः पितृवैरी परैर्वृतः । अस्य पिता च तद्भार्या सततं पाति धर्मतः ॥ ४ ॥ जायेशे पञ्चमे भोगी पुत्रैः पाल्योऽतिविश्रुतः । जायावैरी सदा पुत्रैः पालितस्त्री निरुत्सवः ॥ ५ ॥ जायेशे शत्रुगे जायावैरिणं दुष्टमार्गगम् । स्त्रीसङ्गात्क्षयिणं क्रूरे स्त्रीदोषान्मरणं भवेत् ॥ ६ ॥ जायेशे सप्तमे श्रीमान्दीर्घायुः प्रीतिवत्सलः । तेजस्वी च सुशीलश्च जायते मानवः सुधीः ॥ ७ ॥ जायेशे मृत्युगे वेश्यासक्तश्चाऽतिदुराशयः । परस्त्रीक्षीणवित्तश्च सर्वथा दुष्टचेष्टकः ॥ ८ ॥ जायेशे नवमे

सौम्ये सुशीला गुणग्राहिणी । जाया रूपवती क्रूरे कुरूपा दुष्टधीमती ॥ ९ ॥ जायेशे दशमे क्रूरे नृपदाम्भिकलुम्पटः । दुष्टान्तःकरणो दुष्टो नारीवशगतोधिकम् ॥ १० ॥ जायेशे लाभगे भक्ता रूपिणी शीलसंयुता । दयिता परिणीताऽस्य म्रियते प्रसवच्छलात् ॥ ११ ॥ जायेशे द्वादशे भार्या नास्तिका दुष्टवासना । लोला विक्षिप्तचित्ता च सङ्कल्पैः कलिता भृशम् ॥ १२ ॥ ( मृत्युपति का ) मृत्युपे लग्नगे विघ्नैरुद्विग्नो दीर्घरोगभृत् । दुष्टानुवादनिरतो लक्ष्मीं भूपादवाप्यते ॥ १ ॥ मृत्युपे धनगे स्वल्पजीवी वैरी च तस्करः । क्रूरेऽथ सौम्येऽतिशुभं किन्तु भूपान्मृतिर्भवेत् ॥ २ ॥ मृत्युपे सहजे बन्धुवैरी व्यङ्गो-

ऽतिदुष्टवाक् । लोलः सोदरहीनश्च जायते मनुजः कृशी ॥ ३ ॥ मृत्युपे तुर्यगे पितृवैरी पितृधनापहः । पितापुत्रौ तनू घ्नन्तौ पिता रोगान्वितो भवेत् ॥ ४ ॥ मृत्युपे पञ्चमे क्रूरे सुतैर्हीनः शुभे सुती । तस्य पिता न जीवेच्च जीवेच्चेन्नहि भाग्ययुक् ॥ ५ ॥ मृत्युपे शत्रुगे सूर्ये भूपाऽरिर्नेत्ररुक् गुरौ । शनौ रोगी भयं भौमे कष्टमऽन्यैर्ग्रहैर्भवेत् ॥ ६ ॥ मृत्युपे सप्तमे गुह्यरोगी कुशीलवल्लभः । दुष्टो दुष्टे वनिताद्वेट् तद्वेषाच्च मृतिं लभेत् ॥ ७ ॥ मृत्युपे मृत्युगे रोगैर्ग्रस्तोऽतिकपटी नरः । दुष्टकर्मसु निष्णातो व्यवसायी च जायते ॥ ८ ॥ मृत्युपे नवमे वैरिघातकः सुखव्यङ्गकः । निर्बन्धुश्चैव तेजस्वी निःस्नेहो धर्मकृतिषु ॥ ६ ॥

मृत्युपे दशमे भूपकर्मा शाठ्यकलाप्रियः । आलसो वन्यभोगैश्च जीवति मातृपालकः ॥ १० ॥ मृत्युपे लाभगे बाल्ये दुःखी पश्चात्सुखी नरः । दीर्घायुश्च भवेत्सौम्ये पापे स्वल्पवयःचितिः ॥ ११ ॥ मृत्युपे व्ययगे दुष्टो नतस्कन्दो नचाऽतिरुक् । अङ्गहीनो मृतः काकैर्भक्ष्योऽतिनीचकर्मकः ॥ १२ ॥ (भाग्येश का)

भाग्येशे लग्नगे देवान्गुरूंश्च मानिको बली । कृपणो भूपकर्मा च स्वल्पग्रासी भवेत्सुधीः ॥ १ ॥ भाग्येशे धनगे ख्यातः सुशीलः सुकृती सुधीः । सभ्यश्चतुष्पदोत्पन्नपीडाङ्गो धनवान्नरः ॥ २ ॥ भाग्येशे सहजे दक्षस्तेजस्वी बन्धुवत्सलः । अक्षीणकर्मकृद्बन्धुहितकृत्सुकृती सुखी ॥ ३ ॥ भाग्येशे तुर्यगे पितृभक्तः

पितृहितो नरः । सुकृतैर्विदितो भोगी तेजस्वी च भवेन्नरः ॥ ४ ॥ भाग्येशे पञ्चमे देवे गुरौ भक्तः शुभाशयः । वपुषा सुन्दरो वाग्मी कन्यापुत्रकुटुम्बकः ॥ ५ ॥ भाग्येशे शत्रुगे शत्रुप्राणकर्षी त्वऽधार्मिकः । क्रूरमतिर्निष्ठुरवाक् जननिन्दाप्रवर्तकः ॥ ६ ॥ भाग्येशे सप्तमे तस्य पत्नी सत्यवती सती । सुशीला सुविनेता च जायते पतिपोषका ॥ ७ ॥ भाग्येशे मृत्युगे यत्र-विघाती गृहबन्धुहृत् । दुष्कृती षण्ठको नित्यं जनो-द्वेगकरः पुमान् ॥ ८ ॥ भाग्येशे नवमे प्रीतिं बन्धुषु कुरुते दृढम् । दाता भोक्ता सुपूज्यश्च स्वकुटुम्बस्य पोषकः ॥ ९ ॥ भाग्येशे दशमे भूपकर्माणं नृपमा-निनम् । पुण्यवन्तं मातृभक्तं शूरं ख्यातं नरं हितम्

॥ १० ॥ भाग्येशे लाभगे ख्यातो दीर्घायुर्बन्धुतत्परः । स्नेहलो नृपतेर्मानी सुकृती सुसुती भवेत् ॥ ११ ॥ भाग्येशे द्वादशे मानी विद्वान्सत्कर्मकारकः । देशान्तरेषु विख्यातः शुभे पापे च धूर्तकः ॥ १२ ॥

( कर्मेश का ) कर्मेशे लग्नगे मातृद्वेषी जनकसेवकः । दुःखार्तो जनकश्चास्य मातान्यपुरुषे रता ॥ १ ॥ कर्मेशे धनगे मात्रा पालितो लोभसंकुलः । स्वल्पग्रासी नीचकर्मा मातुर्दुष्टकृतौ रतः ॥ २ ॥ कर्मेशे सहजे मातुर्विरोधी सुजनार्तिकृत् । सेवारतो विकर्मस्थो मातुलैः पालितश्चिरम् ॥ ३ ॥ कर्मेशे तुर्यगे पित्रोः पोषणेपूजने रतः । सुखी मानी धनी भोगी सत्कर्मनिरतो भवेत् ॥ ४ ॥ कर्मेशे पञ्चमे नृत्यगीतादि-

निरतः सदा । शुभकर्मी विडम्बी च तत्सुतान्पाति तत्प्रसूः ॥ ५ ॥ कर्मेशे शत्रुगे क्रूरे बाल्येऽपि दुःखभाग्भवेत् । परान्ननिरता माता तद्ध्यानान्मनसाऽसुखी ॥ ६ ॥ कर्मेशे सप्तमे पुत्रैः श्लाघ्या रूपवती वधूः । स्वयं कलत्ररागी च भवति मातृतत्परः ॥ ७ ॥ कर्मेशे निधने शूरं क्रूरं दुष्टं मृषावदम् । मातरि दुःखदं कुर्यात्स्वल्पवृत्तिं च कैतवम् ॥ ८ ॥ कर्मेशे भाग्यगे साधुशीलं सद्बन्धुसंयुतम् । तन्मातापि सुशीला स्याद्धर्मिणी साधुसेवकः ॥ ९ ॥ कर्मेशे कर्मगे मातुर्मातृपत्नीयस्वेष्टकृत् । बन्धूनां संगतिकरो विद्याविनयभूषितः ॥ १० ॥ कर्मेशे लाभगे मात्रोज्झितभर्त्रा च पालितः । दीर्घायुर्मातृसुखदः सुखी भोगी भवे-

दीर्घरोगी विदेशगः । चौरान्मृतिमऽवाप्नोति क्रूरे सौम्ये तु सौख्यभाक् ॥ ६ ॥ लाभेशे सप्तमे शूरस्तेजस्वी शीलसंयुतः । दीर्घायुश्चैकदयितो भोगी च भवति पुमान् ॥ ७ ॥ लाभेशे निधने क्रूरे स्वल्पजीव्यऽतिरोगयुक् । जीवन्मृत इव दुःखी सौम्ये सम्भवति मनाक् ॥ ८ ॥ लाभेशे भाग्यगे सौम्ये प्राप्तविद्यो बहुश्रुतः । धर्मैः प्रसिद्धः सद्भक्तः क्रूरे हीनो जनैर्धनैः ॥ ९ ॥ लाभेशे कर्मगे मातुर्भक्तः पुण्यः सुजीविकः । पितृद्वेषी धनी मानी चिरायुर्बलवान्सुखी ॥ १० ॥ लाभेशे लाभगे भोगी चिरायुः शीतलाशयः । सर्वाह्लादी कुटुम्बी च सत्कर्मनिरतो भवेत् ॥ ११ ॥ लाभेशे व्ययगे भोगी नस्थिरो मानवर्जितः । उत्पन्नभोजी रोगाप्तो वित्ति-

न्नरः ॥ ११ ॥ कर्मेशे व्ययगे मातृद्रव्यभोगी बली सुखी । क्रूरे विदेशनिरतो व्यसनी च भवेन्नरः ॥ १२ ॥

( लाभेश का ) लाभेशे लग्नगे शूरो भोक्ता दाताऽल्पजीविनः । जनैः प्रियः सौभाग्यवांस्तुच्छदोषान्मृतिं लभेत् ॥ १ ॥ लाभेशे धनगे स्वल्पभोजनः स्वल्पवृत्तिकः । नीचवृत्तिश्चौरकर्मी क्रूरे सोम्ये च रोगयुक् ॥ २ ॥ लाभेशे सहजे बन्धुपालको बन्धुसंमतः । रिपुवर्गपरिच्छेता शुभे तु नितरां भवेत् ॥ ३ ॥ लाभेशे तुर्यगे पितृस्नेही च चिरजीवितः । सुकर्मनिरतो लाभी नित्यं भोगी भवेन्नरः ॥ ४ ॥ लाभेशे पञ्चमे पितृसूनू स्नेहेन संयुतौ । तुल्यगुणावन्योन्यं स्तः सुजीवी सुकृती भवेत् ॥ ५ ॥ लाभेशे शत्रुगे वैरी

धार्तिसमाकुलः ॥ १२ ॥ ( व्ययेश का ) व्ययेशे लग्नगे षण्ठो विदेशनिरतः सुधीः । सुवाक् कुसङ्ग-निन्दालुर्जायते मनुजो भृशम् ॥ १ ॥ व्ययेशे धनगे दीनो कटुवाक् कटुजीविकः । भौमे तु मृतिमाप्नोति नृपात्तस्करभीतितः ॥ २ ॥ व्ययेशे सहजे क्रूरे बन्धुहीनो शुभे धनी । तत्सोदरः सुकृपणो बन्धुद्वेषी च दुर्मतिः ॥ ३ ॥ व्ययेशे तुर्यगे रोगैरर्दितो कृपणो घृणी । जीवन्मृतो महादुःखी मृत्युमाप्नोति दोषतः ॥ ४ ॥ व्ययेशे पञ्चमे क्रूरे निष्पुत्रः ससुतः शुभे । पितुर्द्रव्येन भोगिष्णुः स्वसामर्थ्यविवर्जितः ॥ ५ ॥ व्ययेशे शत्रुगे क्रूरे कृपणो दूषकः कुधीः । लभते परतो मृत्युं शुक्रे तु नेत्रवर्जितः ॥ ६ ॥ व्ययेशे सप्तमे

क्रूरे दुष्टकर्मा विरुद्धवाक् । निःस्त्रीको व्यसनी सौम्ये वेश्यासक्त्या विनश्यति ॥ ७ ॥ व्ययेशे निधने क्रूरे वृत्तिहीनोपि निष्क्रियः । द्रोहमतिर्भवेत्सौम्ये धनसंग्रहतत्परः ॥ ८ ॥ व्ययेशे नवमे सौम्ये तीर्थालोकी विवृत्तिकः । क्रूरे तु तद्धनं व्यर्थं विनाशमुपगच्छति ॥ ९ ॥ व्ययेशे दशमे श्लाघी स्वस्त्रीप्रीतिरतः शुभः । सुती धनी कुटुम्बी च माताऽस्य दुष्टचेतना ॥ १० ॥ व्ययेशे लाभगे स्वाढ्यो दीर्घजीवी बहुप्रदः । प्रतिष्ठितोऽतिविख्यातः सत्यवचनतत्परः ॥ ११ ॥ व्ययेशे व्ययगे ग्रामनिवासी रतिमान् कृती । पशुमान्ग्राम युक्तश्च भूतिमाञ्छुभलक्षणः ॥ १२ ॥

इति तृतीयं जातकलक्षणम् ॥ ३ ॥

| | | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| वर्षद्रेष्काणच | मे | वृ | मि | क | सिं | कं | तु | वृ | धं | मं | कुं | मी | राशय: |
| | वृ | मि | मी | वृ | म | सिं | क | वृ | मि | मी | वृ | मं | १०।०।० |
| | सिं | क | वृ | मि | मी | वृ | मं | सिं | क | वृ | मि | मी | २०।०।० |
| | वृ | मं | सिं | क | वृ | मि | मी | वृ | मं | सिं | क | वृ | ३०।०।० |
| होराचक्र | मे | वृ | मि | क | सिं | कं | तु | वृ | धं | मं | कुं | मी | राशय: |
| | सिं | क | सिं | क | सिं | क | सिं | क | सिं | क | सिं | क | १५।०।० |
| | क | सिं | क | सिं | क | सिं | क | सिं | क | सिं | क | सिं | ३०।०।० |
| द्रेष्काणचक्र | मे | वृ | मि | क | सिं | कं | तु | वृ | धं | मं | कुं | मी | राशय: |
| | मे | वृ | मि | क | सिं | कं | तु | वृ | धं | मं | कुं | मी | १०।०।० |
| | सिं | क | तु | वृ | धं | मं | कुं | मी | मे | वृ | मि | क | २०।०।० |
| | धं | मं | कुं | मी | मे | वृ | मि | क | सिं | कं | तु | वृ | ३०।०।० |
| नवांश(ना) मुहुत्तचक्र | मे | वृ | मि | क | सिं | कं | तु | वृ | धं | मं | कुं | मी | राशय: |
| | मे | मं | तु | क | मे | मं | तु | क | मे | मं | तु | क | ३।२०।० |
| | वृ | कुं | वृ | सिं | वृ | कुं | वृ | सिं | वृ | कुं | वृ | सिं | ६।४०।० |
| | मि | मी | धं | कं | मि | मी | धं | कं | मि | मी | धं | कं | १०।०।० |
| | क | मे | मं | तु | क | मे | मं | तु | क | मे | मं | तु | १३।२०।० |
| | सिं | वृ | कुं | वृ | सिं | वृ | कुं | वृ | सिं | वृ | कुं | वृ | १६।४०।० |
| | कं | मि | मी | धं | कं | मि | मी | धं | कं | मि | मी | धं | २०।०।० |
| | तु | क | मे | मं | तु | क | मे | मं | तु | क | मे | मं | २३।२०।० |
| | वृ | सिं | वृ | कुं | वृ | सिं | वृ | कुं | वृ | सिं | वृ | कुं | २६।४०।० |
| | धं | कं | मि | मी | धं | कं | मि | मी | धं | कं | मि | मी | ३०।०।० |

